अथ माध्यंदिनशाखीय-

# पुरुषसूक्तप्रारम्भः ।

श्रीगणेशाय नमः ॥ ॥ अथ माध्यंदिनीयपुरुषसूक्तप्रारंभः ॥ हरिः ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ सभूमिꣳ सर्वतस्पृत्वात्यतिष्ठद्दशांगुलम् ॥ १ ॥ पुरुष एवेदꣳ सर्वं यद्भूतं यच्च भाव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥ एतावानस्य महिमातो ज्यायाँश्च पूरुषः ॥ पादोऽस्य विश्वा भूतानि त्रिपाद

१ सभूमिं विश्वतो वृत्वात्यतिष्ठद्दशांगुलं

स्यामृतन्दिवि ॥ ३ ॥ त्रिपादूर्द्ध्वऽउदैत्पुरु
षःपादोऽस्येहाभवत्पुनः ॥ ततोविष्वङ्
व्यक्रामत्साशनानशनेऽअभि ॥ ४ ॥ ततो
विराडजायतविराजोऽअधिपूरुषः ॥ स
जातोऽअत्यरिच्यतपश्चाद्भूमिमथोपुरः
॥ ५ ॥ तस्माद्यज्ञात्सर्वहुतः सम्भृतम्पृष
दाज्यम् । पशूँस्ताँश्चक्रे वायव्यानार
ण्याग्राम्म्याश्चये ॥ ६ ॥ तस्माद्यज्ञात्सर्व

पु० २

हुतऽऋचुःसामानिजज्ञिरे ॥ छन्दाᳩसि
जज्ञिरेतस्माद्यजुस्तस्मादजायत ।७।
तस्मादश्श्वाऽअजायन्तयेकेचोभयादं
तः ॥ गावोहजज्ञिरेतस्मात्तस्माज्जा
ताऽअजावयः ॥ ८ ॥ तंय्यज्ञम्बर्हिषि
प्प्रौक्षन्पुरुषञ्जातमग्ग्रतः ॥तेनदेवाऽअ
यजन्तसाद्ध्याऽऋषयश्च्चये ॥ ९ ॥ यत्पु
रुषंव्यदधुःकतिधाव्यकल्प्पयन् ॥ मु

सू० २

खङ्किमस्यासीत्किम्बाहूकिमूरूपादाऽ
उच्येते ॥ १० ॥ ब्राह्मणोऽस्य मुख
मासीद्बाहूराजन्यः कृतः ॥ ऊरूतदस्य
यद्वैश्यः पद्भ्याꣳ शूद्रोऽअजायत ॥ ११ ॥
चन्द्रमामनसोजातश्चक्षोः सूर्य्योऽअ
जायत ॥ श्रोत्राद्वायुश्चप्राणश्चमुखाद
ग्निरजायत ॥ १२ ॥ नाभ्याऽआसीद
न्तरिक्षꣳशीर्ष्णोद्यौः समवर्त्तत । पद्भ्या

पु० ३

म्भूमिर्द्दिशः श्श्रोत्रात्तथालोकाँर ॥ऽअंक
ल्प्पयन् ॥ १३ ॥ यत्पुरुषेणहविषादेवा
यज्ञमतन्न्वत ॥ व्वसन्तोस्स्यासीदा
ज्ज्यंङ्ग्रीष्ष्मऽइध्मः शरद्धविः ॥ १४ ॥
सप्तास्स्यासन्नपरिधयस्त्रिः सप्तसमिधंः
कृताः ॥ देवायद्यज्ञन्तन्न्वाना ऽअवध्न
न्नपुरुषम्पशुम् १५॥ यज्ञेनयज्ञमयजन्त
देवास्तानि धर्म्माणिप्प्रथमान्न्यासन् ॥

सू० ३

तहुनांकम्माहिमानंःसचन्तुयत्त्रपूर्व्वेसा
द्ध्याःसन्तिदेवाः ॥ १६ ॥ इति पुरुषसू
क्तं समाप्तम् ॥ ॥ ॥ ॥ ॥
श्रीगणेशाय नमः ॥ ॥ अथश्रीसूक्तप्रा
रम्भः ॥ ॐ हिरंण्यवर्णांहरिंणीं सुवर्ण
रजतस्त्रजाम् ॥ चन्द्रां हिरण्मंयींलक्ष्मीं
जातवेदो ममावह ॥ १ ॥ तांमआ
वंहजातवेदो लक्ष्मीमनंपगामिनीम् ॥

यस्यां हिरण्यं विन्देयं गामश्वं पुरु
षानहम् ॥ २ ॥ अश्वपूर्णां रथमध्यां ह
स्तिनादप्रमोदिनीम् ॥ श्रियं देवीमुप
ह्वये श्रीर्मा देवीर्जुषताम् ॥ ३ ॥ कांसो
स्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं
तृप्तां तर्पयन्तीम् ॥ पद्मेस्थितां पद्मवर्णां
तामिहोपह्वये श्रियम् ॥ ४ ॥ चन्द्रां प्रभा
सां यशसा ज्वलन्तीं श्रियं लोके देवजु

ष्ठामुदाराम् । तांपद्मनींमिं शरणमहं प्रपं
द्येऽअलक्ष्मीर्म्मे नश्यतां त्वां वृणोमि
॥ ५ ॥ आदित्यवर्णे तपसोऽधिजातो
वनस्पतिस्तव वृक्षोऽथ बिल्वः ॥ तस्य
फलानि तपसा नुदन्तु मायांतरायाश्च
बाह्याऽअलक्ष्मीः ॥६ ॥ उपैतु मांदेवस
खः कीर्त्तिश्च मणिना सह ॥ प्रादुर्भूतो
सुराष्ट्रेऽस्मिनकीर्त्तिवृद्धिंददातुमे ॥७॥

क्षुत्पिपासामलां ज्येष्ठा अलक्ष्मीनाश
याम्यहम् ॥ अभूतिमसमृद्धिं च सर्वां
निर्णुद मे गृहात् ॥ ८ ॥ गन्धद्वारां दुरा
धर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीं
सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ९ ॥
मनसः काममाकूतिं वाचः सत्यमशी
महि । पशूनां रूपमन्नस्य मयि श्रीः श्रय
तां यशः ॥ १० ॥ कर्दमेन प्रजाभूताम्

यिसम्भ्रमु कर्द्दम ॥ श्रियं वासयमे कुले मातरं पद्ममालिनीम् ॥ ११ ॥ आपः स्रु जन्तु स्निग्धानि चिक्लीत वसमे गृहे ॥ नीचदेवीं मातरं श्रियं वासयं मे कुले ॥ १२ ॥ आर्द्रां पुष्करिणीं पुष्टीं सुवर्णां हेममालिनीम् ॥ सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो ममावह ॥ १३ ॥ आर्द्रां यः करिणीं यष्टिं पिङ्गलां पद्ममालिनीम् ॥ च

पद्म भारती

न्द्राᳫंहिण्मयीं लक्ष्मींजातवेदो मुमावह ॥१४॥ तांमुऽआवहजातवेदोलक्ष्मीमनं पगामिनीम् ॥ यस्यांहिरण्यं प्रभूतिं गावोंदास्योश्वान्विन्देयंपुरुषानहम् ॥१५॥ यःशुचिःप्रयतोभूत्वाजुहुयादाज्यमन्वं हम् ॥ श्रियःपञ्चदशर्चञ्च श्रीकामःस ततं जपेत् ॥ १६ ॥

॥ इति श्रीसूक्तं समाप्तम् ॥

श्रीः॥सरसिजनिलये सरोजहस्ते धवलतरे शुभग
न्धमाल्यशोभे । भगवति हरिवल्लभे मनोज्ञे
त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥ १ ॥ धनम
ग्निर्धनं वायुर्धनं सूर्याधनवसुः ॥ धनमिन्द्रोबृह
स्पतिर्वरुणं धनमश्विना ॥ २ ॥ वैनतेय सोमं
पिब सोमंपिबतु वृत्रहा ॥ सोमं धनस्यसोमिनो
मह्यंददातुसोमिनः ॥ ३ ॥ न क्रोधो न च मा
त्सर्यं न लोभो नाशुभामतिः ॥ भवन्ति कृतपु
ण्यानांभक्तानां सूक्तजापिनाम् ॥ ४ ॥ मद्मानने
पद्मऊरू पद्माक्षी पद्मसंभवे ॥ तन्मे भजासि

पद्माक्षि येन सौख्यं लभाम्यहम् ॥ ५ ॥ विष्णु
पत्नीं क्षमां देवींमाधवीं माधवप्रियाम् ॥ विष्णु
प्रियां सखींदेवीं नमाम्यच्युतवल्लभाम् ॥ ६ ॥
महालक्ष्मीं च विद्महे विष्णुपत्नींचधीमहि ॥
तन्नो लक्ष्मीः प्रचोदयात् ॥ ७ ॥ पद्माननेपद्मिनि
पद्मपत्रे पद्मप्रिये पद्मदलायताक्षि ॥ विश्वप्रिये
विश्वमनोऽनुकूलेत्वत्पादपद्मं मयि सन्निधत्स्व
॥ ८ ॥ आनन्दः कर्दमः श्रीदश्चिक्लीत इति विश्रु
ताः । ऋषयः श्रियः पुत्राश्च मयि श्रीर्देवी देव

ता ॥ ९ ॥ ऋणरोगादिदारिद्र्यं पापञ्च अपमृ
त्यवः ॥ भयशोकमनस्तापा नश्यन्तु मम सर्व
दा ॥ १० ॥ श्रीवर्चस्वमायुष्यमारोग्यमाविधा
च्छुभमानं महीयते धान्यंधनं पशुं बहुपुत्रलाभं
शतसंवत्सरं दीर्घमायुः ॥ ११ ॥

॥ इति लक्ष्मीसूक्तं समाप्तम् ॥

इदं पुस्तकं मुंबय्यां श्रीकृष्णदासात्मजखेम-
राजेन स्वकीये "श्रीवेङ्कटेश्वराख्य"
(स्टीम्) यंत्रालये मुद्रितम् ।
शके १८२६, संवत् १९६१.

